## श्रीसुविधिचरित्रम् ॥९॥

सुविधिजिनपतिर्वः पातु पातालपृथ्वी–
त्रिदिवजयमहौजा निर्जितो येन गर्जन् ।
सहजमकरचिह्नच्छद्मना पादसीम्नि
स्वमिव मकरकेतुः केतुमौज्झद् विजेतुः ॥ १ ॥[1]
'पुष्करवर'द्वीपार्द्धे, प्राग्'विदेह'विभूषणे ।
विजये 'पुष्कलावत्यां', पूरास्ते 'पुण्डरीकिणी' ॥ २ ॥[2]
तत्रासीत् पद्मभूपोऽसौ, जगन्नन्दगुरोर्व्रतम् ।
प्राप्य तप्त्वा तपो मृत्वा, 'वैजयन्ते' सुरोऽजनि ॥ ३ ॥
'जम्बू'द्वीपेऽत्र 'भरते', 'काकन्दी'त्यस्ति पूर्वरा ।
नृपोऽभूत् तत्र सुग्रीव–स्तस्य रामेति वल्लभा ॥ ४ ॥
फाल्गुने कृष्णनवम्यां, सुधांशौ मूलधिष्ण्यगे ।
'वैजयन्ता'त् त्रयस्त्रिंशत्–सागरायुःक्षये च्युतः ॥ ५ ॥
महापद्मनृपजीवो, रामाकुक्षाववातरत् ।
मार्गस्य कृष्णपञ्चम्यां, मूलर्क्षे धनगे विधौ ॥ ६ ॥
रामाऽसूत सुतं श्वेत–कान्तिं मकरलाञ्छनम् ।
'इक्ष्वाकु'कुलकोटीरं, नवमं तीर्थनायकम् ॥ ७ ॥
दक्षा सर्वेषु विधिषु, गर्भस्थेऽत्र जनन्यभूत् ।
पुष्पदोहदतो दन्तो–द्गमोऽस्याभूदिति प्रभोः ॥ ८ ॥
सुविधिः पुष्पदन्तश्चे–त्यभिधाने पिता व्यधात् ।
जन्मतः पूर्वपञ्चाशत्–सहस्रेषु गतेष्वभूत् ॥ ९ ॥
धनुःशतोन्नतः पित्रा, स्वामी राज्ये न्यवेशयत ।
साष्टाविंशत्यङ्गं पूर्व–लक्षार्द्धं राज्यधार्यभूत् ॥ १० ॥
प्रभुर्मार्गस्य कृष्णायां, षष्ठ्यां मूले परेऽहनि ।
'शूरप्रभा'ऽऽख्यां शिबिका–मारूढो निरगात् पुरः ॥ ११ ॥
राज्ञां सह सहस्रेण, 'सहस्राम्रवणे' वने ।
कृतषष्ठतपाः स्वामी, प्रव्रज्यां प्रतिपन्नवान् ॥ १२ ॥

१ मालिनी । २ अतः परमन्त्यं पद्यं विहाय सर्वेषां छन्दोऽनुष्टुप् ।

द्वितीयेऽह्नि पुरे 'श्वेत–पुरे' पुष्पनृपौकसि ।
बभूव परमान्नेन, पारणं सुविधिप्रभोः ॥ १३ ॥
ततोऽन्यत्र चतुर्मासीं, छद्मस्थो व्यहरन् प्रभुः ।
'सहस्राम्रवणे' भूयो–ऽभ्येत्य प्रतिमया स्थितः ॥ १४ ॥
मालूरस्य तरोर्मूले, पूर्वाह्णे षष्ठतत्परः ।
ऊर्जशुक्लतृतीयायां, मूलर्क्षे प्राप केवलम् ॥ १५ ॥
चैत्यद्रुर्द्वादशधनुः–शतोच्चः सुविधेरभूत् ।
अष्टाशीतिर्गणधरा, वराहप्रमुखास्तथा ॥ १६ ॥
अजिताख्योऽभवद् यक्षः, श्वेताङ्गः कूर्मवाहनः ।
मातुलिङ्गा-ऽक्षसूत्राङ्कौ, बिभ्राणो दक्षिणौ करौ ॥ १७ ॥
वामौ नकुल-कुन्ताङ्कौ, तीर्थे श्रीसुविधिप्रभोः ।
दक्षिणौ वरदं साक्ष–सूत्रं च दधती भुजौ ॥ १८ ॥
वामौ कलशा-ऽङ्कुशाङ्कौ, गौराङ्गी वृषवाहना ।
सुतारा सुविधेरासीत्, तीर्थे शासनदेवता ॥ १९ ॥
प्रभोः सर्वपरीवारे, द्वे लक्षे व्रतिनोऽभवन् ।
व्रतिन्यो लक्षमेकं तु, सहस्रा विंशतिस्तथा ॥ २० ॥
शतानि चतुरशीति–रवधिज्ञानशालिनः ।
चतुर्दशपूर्वभृतः, सहस्रं पञ्चशत्यपि ॥ २१ ॥
मनःपर्ययिणः सप्त, सहस्राः पञ्चशत्यपि ।
केवलज्ञानसंयुक्ताः, शतानि पञ्चसप्ततिः ॥ २२ ॥
त्रयोदश सहस्राणि, जातवैक्रियलब्धयः ।
षट्सङ्ख्यानि सहस्राणि, सञ्जातवादलब्धयः ॥ २३ ॥
द्वे लक्षे एकोनत्रिंशत्, सहस्राः श्रावकाः पुनः ।
श्राविकास्तु चतुर्लक्षी, द्वासप्ततिसहस्र्यपि ॥ २४ ॥
अष्टाविंशत्यङ्गया हीने, पूर्वलक्षे गते व्रतात् ।
ऊर्ध्वस्थितः सानशनो, मासं 'सम्मेत'पर्वते ॥ २५ ॥

---

१ ख–'सालूरस' ।　२ क–'तत्परैः' ।　३ कार्त्तिक० ।　४ क–'सूत्राख्यो' (?) ।

समं मुनिसहस्रेण, पूर्वाह्णे सुविधिप्रभुः ।
नभस्ये शुक्लनवम्यां, मूलर्क्षेऽगात् परं पदम् ॥ २६ ॥—युग्मम्
पूर्वलक्षार्द्धं कौमार्ये, पूर्वलक्षार्द्धमेव हि ।
अष्टाविंशत्यङ्गयुक्तं, राज्यभोगे ययौ पुनः ॥ २७ ॥
पूर्वलक्षमष्टाविंश—त्यङ्गहीनं पुनर्व्रते ।
इत्यासीत् पूर्वलक्षे द्वे, सर्वायुः सुविधिप्रभोः ॥ २८ ॥
सुविधिस्वामिनिर्वाणं, श्रीचन्द्रप्रभनिर्वृतेः ।
सागरोपमकोटीनां, गतायां नवतावभूत् ॥ २९ ॥
ध्याते यत्र नवग्रहार्तिरुदयं नायाति तत्त्वानि यो
व्याचख्यौ नव यस्य वाग् नवसुधाकुण्डत्रपाकारिणी ।
नित्यं यत्पदपद्मयुग्मपुरतः पद्मानि देवा नव
व्यातेनुर्नवमो जिनः स जयति श्रीपुष्पदन्तः प्रभुः ॥ ३० ॥[1]
ग्रन्थाग्रं ॥ ३३ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्रसङ्क्षिप्तचरिते नवमं सुविधिजिनचरितं समाप्तम् ॥ ९ ॥

## श्रीशीतलचरित्रम् ॥ १० ॥

सम्यग्ज्ञानचरित्रदर्शनसमुद्भूतं यशः किं त्रिधा
त्रैलोक्यं पवितुं महः समुदितं किं ब्रह्मरन्ध्रात् त्रिधा ।
दातुं वा भुवनत्रयाय सुकृतं सज्जीकृतं किं त्रिधे-
त्यूह्यं वोऽवतु शीतलस्य शिरसि श्वेतातपत्रत्रयम् ॥ १ ॥[2]
'पुष्करवर'द्वीपार्द्धे, प्राग्'विदेहे'कमण्डने ।
'वत्स'नाम्नि विजयेऽस्ति, 'सुसीमा' सञ्ज्ञया पुरी ॥ २ ॥[3]
तस्यां पद्मोत्तरो राजा, समये सोऽग्रहीद् व्रतम् ।
अस्ताघगुरोः पार्श्वेऽसौ, मृत्वाऽभूत् 'प्राणते' सुरः ॥ ३ ॥

१–२ शार्दूल० । ३ अन्त्यं पद्यं त्यक्त्वा शेषाणां छन्दोऽनुष्टुप्' । ४ क–'गुरुपार्श्वे' । ५ ख–'मृत्वाऽऽसीत्' ।

'जम्बू'द्वीपेऽत्र भरते-ऽभूद् 'भद्दिलपुरे' पुरे ।
राजा दृढरथो नाम, नन्दा तस्य प्रियाऽजनि ॥ ४ ॥
विंशतिसागरानायुः, प्रपाल्य 'प्राणता'च्युतः ।
वैशाखस्य कृष्णषष्ठ्यां, पूर्वाषाढास्थिते विधौ ॥ ५ ॥
नन्दाकुक्षिं पद्मोत्तर-नृपजीवो व्यभूषयन् ।
माघस्य कृष्णद्वादश्यां, पूर्वाषाढाभिधे च भे ॥ ६ ॥
विधौ धनगतेऽसूत, सुतं नन्दा सुवर्णभम् ।
'इक्ष्वाकु'वंश्यं दशमा-र्हन्तं श्रीवत्सलाञ्छनम् ॥ ७ ॥-विशेषकम्
गर्भस्थे तत्र नन्दायाः, स्पर्शाद् दाहज्वरातुरः ।
शैत्यं पिताऽऽप तेनैतं, स चक्रे शीतलाभिधम् ॥ ८ ॥
प्रभुः पूर्वसहस्रेषु, गतेषु पञ्चविंशतौ ।
युवा नवतिचापोच्चः, पित्रा राज्ये न्यवेश्यत ॥ ९ ॥
ततः पूर्वसहस्राणि, पञ्चाशत् परमेश्वरः ।
जनकेनार्पितं राज्यं विधिवत् पर्यपालयत् ॥ १० ॥
माघस्य कृष्णद्वादश्यां, पूर्वाषाढागते विधौ ।
'चन्द्रप्रभा'ऽऽख्यां शिबिका-मारूढो निर्ययौ पुरः ॥ ११ ॥
राज्ञां सह सहस्रेण, 'सहस्राम्रवणे' वने ।
अपराह्णे कृतषष्ठः, प्रव्रज्यां प्रभुरग्रहीत् ॥ १२ ॥
द्वितीयेऽह्नि 'रिष्टपुरे', पुनर्वसुनृपौकसि ।
चकार परमान्नेन, पारणं शीतलप्रभुः ॥ १३ ॥
छद्मस्थोऽन्यत्र त्रीन् मासान्, विहृत्य पुनरागतः ।
'सहस्राम्रवणे' प्लक्ष-द्रुमूले प्रतिमाश्रितः ॥ १४ ॥
पौषकृष्णचतुर्दश्यां, पूर्वाषाढागते विधौ ।
पूर्वाह्णे केवलं प्राप, कृतषष्ठतपाः प्रभुः ॥ १५ ॥
चैत्यद्रुरशीत्यधिक-दशचापशतोन्नतः ।
एकाशीतिरानन्दाद्याः, प्रभोर्गणभृतस्तथा ॥ १६ ॥

---

१ क-'भद्रिलपुरे' ।　२ ख-'तस्य नन्दा' ।　३ क-'विधिवत् प्रभुः' ।